न्देन व्यपदेशिसदृशो भावः कार्यं लभ्यते इति तदर्थः। प्रायोऽसहाय एवार्थवत्त्वात् कुरुत इत्यादौ तशब्दाकारोऽचामन्त्य इति व्यवहारे, स आदिर्यस्येति व्यवहारे, चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरिति अन्यत्र विस्तरः ॥ ३० ॥

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह—

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

---

सूत्रस्थैकशब्दसमुच्चायकः अर्थवतेत्यत्र षष्ठ्यर्थे मतुप् षष्ठ्यर्थश्च सम्बन्धः स च वाच्यवाचकभाव एव । एवञ्च यत्फलितं तदाह– अर्थबोधकेनेति । व्यपदेशिवदेक इत्यत्र तृतीयान्ताद्वतिना सादृश्यलाभादाह– व्यपदेशिसदृश इति । भावपदङ्कार्य्यपरम् । तदर्थः=उक्तभाष्याक्षरार्थः । असहायत्वस्य उपलक्ष्यत्वे मानमाह–प्रायइति । टित आदिपदावयवाकारेऽप्यसहायत्वन्निरुक्तमस्त्येवेति तस्य टिसंज्ञायाश्चासिद्धिरित्याह–कुरुत इत्यादाविति । यदुक्तं प्रायः तदभिप्रायस्तु क्वचिदेकवर्णेऽपि ससहाय एवार्थवत्त्वम् यथाऽधीत इत्यादौ । अन्यत्र= उद्योतादौ ॥ ३० ॥

तदन्तविधिप्रसङ्गादत इति सूत्रस्य प्रागुक्तत्वात् तस्य तद्धितविधायकतया गर्गादिभ्य इत्यप्युपस्थितमतस्तत्र शङ्कते–नन्विति। ग्रहणवतेत्यादि=अत्र यस्य प्रातिपदिकस्य सूत्रे ग्रहणमुपादानं तेन तदन्तविधिर्नास्तीत्यर्थकरणेऽसमायामेधास्रजोविनिरिति सूत्रे समासघटकपदस्योपात्तस्य प्रातिपदिकत्वात्तदन्तविध्य-

---

( नन्विति पदाङ्गेतिपरिभाषाघटकतस्येत्यस्योपपादिकामुक्त्वा तदन्तेत्यंशस्यातिव्याप्तिवारकत्वेनोपपादिकामवसरसङ्गत्याह इत्यपि कश्चित् ( परमगर्गादिभ्योऽपीति ) अपिना केवलस्यापि ग्रहणम् । नच व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यपदेशिवद्भावाभावात् येनेति ...ऽपि तस्येत्यंशाभावात्कथं केवलस्येति वाच्यम् प्रातिषे-

इयं च समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रह-
भावापत्तौ यशस्वीत्यादिरूपासिद्धिरतः प्रातिपदिकत्वव्याप्यधर्मव-
त्वेनोपादानं यस्य प्रातिपदिकस्य तेन तदन्तविधिर्नास्तीत्यर्थः कार्य्यः
अस्त्वत्र प्रातिपदिकाप्रातिपदिकसाधारणमिति भवति तेन तदन्तवि-
धिः। नन्वेवञ्जराया [illegible]रसन्यतरस्यामित्यादौ तदन्तविधिर्न स्या-
दत आह—इयञ्चेति। [illegible] प्रत्ययविधौ यः प्रतिषेधो वार्ति

---

धस्य सूत्रगृहीत [illegible]तु इत्याशयात्। (प्रातिपदि-
कत्वव्याप्येत्यादि) ह्यच इ[illegible]दौ ह्यच्त्वस्य प्रातिपदिकत्वव्याप्य-
त्वाभावेन निषेधाप्रवृत्या तद[illegible]विधावनेकाच्स्वपि प्रवृत्तेः ग्रहण-
वत्प्रातिपदिकत्वं प्रत्ययोगिद्वर्णग्र[illegible]ान्यतमाभिन्नत्वे सति प्राति-
पदिकवृत्तिविषयताप्रयोजकत्वम् बो[illegible]म्। तेन यञिञोश्चोगित-
श्चात इञ् इत्यादौ निषेधाप्रवृत्तिः। केचित्तु संख्याया अतिशद-
न्ताया इत्यादौ संख्यात्वस्य प्रत्य[illegible]त्ययसाधारणत्वेन प्राप्तत-
दन्तविधिवारणाय प्रत्ययपदं प्रत्यय[illegible]रम्, अन्यथा बहुगण-
वतुडतीत्यत्र संज्ञाविधाविति निषेधेन [illegible]तिमात्रस्य संज्ञायामपि
प्रदेशेषु संख्याया इत्यादिषु प्रातिपदि[illegible]विशेषणत्वेन तदन्तविधौ
संख्यान्तादित्यर्थे केवलस्यापि डतेः संज्ञाय[illegible]रितार्थ्यात् पञ्चक इति
वत्प्रियपञ्चक इत्यपि स्यात्। ममतु म[illegible]पदानिवेशेन प्रदेशे ग्र-
हणवतेति निषेधात्तदन्तविध्यभावेन नोक्तद[illegible]ः। इदानीं केवल-
स्य संज्ञायाः वैयर्थ्यात्संज्ञाविधाविति वाधित[illegible] तदन्तस्य संज्ञेत्य-
न्यदेतत्। अत एव स्त्रीप्रत्ययेषु ग्रहणवतेति [illegible]षेधाप्रवृत्तौ अनुप-
सर्जनादित्यस्य ज्ञापकत्वं भाष्यशेखरोक्तं सङ्गच्छ[illegible] [illegible]न्यथा टिड्ढ-
त्यत्र टित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेनैतन्निषेध[illegible]प्रवृत्या तदन्त-
विधिना बहुकुरुचरेत्यादौ प्राप्तङीब्वारणायाऽनुपस[illegible]नादित्यस्याव-
श्यकत्वेन तस्य ज्ञापकत्वं भाष्योक्तमसङ्गतं स्यात्। एतेन मा-
नाभावान्मात्रेति न निवेश्यमितिवदन्तः प्रत्युक्ताः। [illegible]मायामेधे-
त्यत्रासन्तादित्यर्थस्तु अनिनस्मन्निितिपरिभाषयाऽस्त्वादौ [illegible]वर्णत्वा
तिदेशेन वर्णग्रहणत्वान्निषेधाप्रवृत्तेः। अत एवानूकारः [illegible]सूकार
इत्यादि भाष्यप्रयोगाः सङ्गच्छन्तेऽन्यथाऽनसित्यादिसमु[illegible]याद्ध-

णवर्जमिति वार्त्तिकस्थप्रत्ययांशानुवादः । अतएवायं प्रत्ययविधिविषय एव । अतएव येन विधिः १, १, ७२ ) इति सूत्रभाष्ये प्रत्ययविधिभिन्नेऽप्तृन् ( ६, ४, ११ ) इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च सङ्गच्छते । अत-

---

कक्तोक्तस्तदनुवादकत्त्वादेव । अय [illegible]=ग्रहणवतेत्येद्वचनबोध्यः प्रतिषेधः । अत एव=उक्तार्थत्वादे । इत्युदाहरणमिति= अप्तृन्नितिसूत्रे यद्यपि स्वसृशब्दस्य [illegible]तिपदिकत्वव्याप्यानुपूर्व्यवच्छिन्नस्य उपादानमस्ति, तथापि [illegible]य सूत्रस्य प्रत्ययविधायकत्वाभावेन तदन्तविधिः । न च [illegible]शब्दनिष्ठानुपूर्वी न प्रातिपदिकत्वव्याप्या तस्याः प्रातिप[illegible]नुकरणे स्वसृ इत्याहेत्यत्रापि सत्त्वादिति वाच्यम् । एवं स[illegible] प्रातिपदिकत्वव्याप्यधर्माप्रासिद्धिरतः प्रातिपदिकत्वव्याप्यत्वं [illegible]प्रातिपादिकत्वाभाववान्योऽनुकरणातिरिक्तस्तद्वृत्तित्वरूपन्निर्व[illegible]मिति भवत्यत्र तदन्ताविधिः नन्वेतस्मिन् उदाहरणे सर्वत्र [illegible]स्थाने चाखम्बुद्धावित्यनेनैव दीर्घस्य-

---

र्णोत्कार इति कारप्रत्य[illegible]ऽनुपपन्नः स्यात् नचैवमल्लोपोऽन इत्यत्रादिति तपरकरणं व्यर्थं [illegible]यादिति वाच्यम् अन्धातोः क्विप्युपधादीर्घे आनित्यादौ वर्ण[illegible]तिदेशोऽपि अल्त्वस्यानतिदेशादनल्विधाविति निषेधस्याप्रवृत्या [illegible]निवद्भावेनान्त्वातिदेशेन प्राप्ताल्लोपस्य वारणाय तदावश्यकत्व[illegible]ति वदन्ति । ( प्रत्ययविधिविषय इति ) तत्वञ्च स्वतादात्म्य [illegible]धनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन प्रत्य[illegible]धिकारपठितत्वे सति प्रययविशिष्टविधायकत्वम् । आद्यसम्बन्[illegible]निवेशाद्गर्गादिभ्योयञित्यस्य सङ्ग्रहः, द्वितीयेन नान्तादसंख्[illegible]दरित्यस्येति बोध्यम् । विशेष्यानुपादानेऽग्रान्तेत्यादावपि निषेध[illegible]त्या कुड्मलाग्रदान्निति न स्यात् । ( उक्तार्थत्वादेव ) प्रत्ययविधिवि[illegible]त्वादेवेत्यर्थः ॥ ३१ ॥

एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम् । सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव । ध्वनितं चेदमसमासे निष्कादिभ्यः (५, १, २०) इति सूत्रे भाष्ये ।

---

सिद्धत्वादन्यथासिद्धे[illegible]हरणदानादेतद्भाष्यमेकदेश्युक्तमत उक्तार्थे साधकान्तरमाह–अ[illegible] एवेति । अस्य वचनस्य प्रत्ययविधिविषयत्वादेव–निषेधकथन[illegible]दिति । ननु तत्रत्यनिषेधकथनमुपलक्षणमस्त्विति चेत् स्वसा[illegible]रमस्वसेत्यपि तद्धुपलक्षणमितिपरमस्वसारावित्यादौ दीर्घाना[illegible]रूपदोषोऽस्त्येवेति गृहाण । ननु वार्त्तिकस्थप्रत्ययांशानुवादत्वन्त[illegible] भवेद्यदि वार्त्तिकस्यास्य वचनस्य समानविषयत्वं स्यात् त[illegible] कथमत आह–सोऽपीति । विशिष्येत्यस्यैव व्याख्यानम्— त[illegible]दिति=। तत् तदित्यस्य प्रातिपदिकत्वव्याप्येत्यर्थः । गृहीतं प्र[illegible]पादिकं यस्मिन् तादृशे सूत्रे इत्यर्थे बहुव्रीहिघटितः कर्मधारयः । [illegible]तपदस्य नित्यसापेक्षत्वेन समासः । एतेन समानविषयत्वं प्रदा[illegible]म् । अतइञित्यादौ तदन्तविधिरप्यनयैव रीत्या निर्बाध [illegible]गिद्वर्णग्रहणवर्जमित्यपि नापूर्वमिति बोध्यम् । ननु तत्र वार्त्तिके [illegible]तिपदिकपदाभावात्कथमस्य समानविषयत्वमत आह– ध्वनित[illegible]ति । तत्र ह्यसमासग्रहणं किमर्थम् परमनैष्किकः, नैतदस्ति [illegible]योजनम् निष्कशब्दात् प्रत्ययो विधीयते तत्र कः प्रसङ्गो [illegible]रमनिष्कशब्दात् प्राप्नोति, तदन्तविधिना प्राप्नोति, ग्रहणवता प्रा[illegible]पदिकेन तदन्तविधिः प्रतिषिध्यते, निष्कादिष्वसमासग्रहणं [illegible]पकं पूर्वत्र तदन्ताप्रतिषेधस्य तेन कृष्णतिलशब्दाच्चतुर्थ्यन्ता[illegible] तद्धितार्थे खलयवमाषेत्यनेन यत्प्रत्ययः सिद्धो भवति कि[illegible]य ज्ञापने प्रयोजनमिति प्रश्ने प्राग्वतेष्ठञित्यत्र तदन्तविधि[illegible] सिद्धो भवतीति भगवतोक्तम् ततो नैतदस्ति प्रयोजनं ग्रहणवता [illegible]तिप-

अत्र च ज्ञापकं सपूर्वाच्च ( ५, २, ८७ ) इति सूत्रम् । अन्यथा पूर्वादिनिः ( ५, २, ८६ ) इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥ ३१ ॥

नन्वेवं सूत्रान्तात् ठक् ( ४, २, ६० ) दशान्ताड्डः ( ५, २, ४५ ) एकगोपूर्वात् ( ५, २, ११८ ) इत्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादि[illegible] प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह [illegible]

व्यपदेशिवद्भावोऽप्रातिप[illegible]केन ॥ ३२ ॥

पूर्वात्सपूर्वादिनिरित्येकयो[illegible] एव कर्त्तव्ये पृथग्योदिकेन तदन्तविधिः प्रतिषिध्यते [illegible]त्युक्त्वा न च ठञ्विधौ काचित् प्रकृतिर्गृह्यते इदं तर्हि [illegible]योजनमार्हादगोपुच्छसङ्ख्यापरिमाणात् ठक् परमगोपुच्छेन [illegible]तम्पारमगोपुच्छिकमत्र ठक्प्रतिषेधाड्ढञ् सिद्धो भवति एत[illegible] नास्ति प्रयोजनम् विधौ प्रतिषेधः प्रतिषेधश्चायमिति प्रतिपा[illegible] अत्र न ठञ् विधौ काचिदित्येवं कथनेन तत्तद्रूपेण प्रा[illegible]दिकस्य यत्र ग्रहणं तत्र प्रतिषेधः इति कथनेन च [illegible]णवतेत्यस्य प्रत्ययविधिविषयत्वमेवेति ध्वनितमित्यर्थः । अ[illegible]था=एतद्वचनाभावे । एतेन व्याख्यानेन यत्केनचिदुक्तं समा[illegible]त्ययविधावित्येतदपेक्षया ग्रहणवतेति भिन्नवचनमिति ता[illegible]स्तम् । असमासग्रहणस्य वार्त्तिकस्थप्रत्ययांशो नापूर्व इत्यत्रै[illegible]ज्ञापकत्त्वादिति ॥ ३१ ॥

तदन्तस्य [illegible]स्थितिप्रसङ्गादाह । नन्वेवमिति । एवम्=प्रातिपदिकेन [illegible]दन्तविधिप्रतिषेधे अपीति शेषः । एतेनैकातिप्रसङ्गस्य परिह[illegible]ऽप्यतिप्रसङ्गान्तरमस्त्येवेति ध्वन्यते । तानेवातिप्रसङ्गानुपपा[illegible]ति– सूत्रान्तादित्यादिना । व्यपदेशिवद्भावोऽप्राति[illegible]दिकेन । अत्रापि प्रातिपदिकपदं पूर्ववत् प्रातिपादिकत्वव्याप्यत[illegible]वच्छिन्नपरमेव अत एव व्यपदेशिवद्भावेनातइञित्यनेनेञ्

गकरणमस्यां ज्ञापकम् । न चेष्टादिभ्यः (५, २, ८८) इति सूत्रेऽनुवृत्त्यर्थं तथा पाठोऽत एवानिष्टीत्यादिसिद्धिरिति वाच्यम्, ज्ञापकपरभाष्य-प्रामाण्येनानिष्टीत्यादि-प्रयोगाणामनिष्टत्वात्, एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च । अत एव नान्तादसङ्ख्यादेः (५, २, ४९) इ[illegible] चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशि[illegible]द्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्ट-

---

अस्यापत्यमिरित्यादौ भ[illegible]ति । अत एव= । सपूर्वादित्यनुवृत्तेरेव । परोक्तमेकयोगनिर्दिष्टानां [illegible]ह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायमाश्रित्य खण्डयति—[illegible]पकपरेत्यादिना । द्वितीयन्यायमाश्रित्याह—एकयोगेऽपीति[illegible] अत एव= । प्रातिपदिकेन व्यपदेशिवद्भावनिषेधादेव । इत[illegible]स्येतिसूत्रमित्यर्थः । अन्यथा= । एतन्निषेधाभावे । परि[illegible]ाघटकं प्रातिपदिकपदमुपा-

---

(एकयोगे इति) ननु स्वातिरि[illegible]ायवकत्वस्य व्यपदेशिवद्भावेनातिदेष्टुमशक्यत्वादेकयोगे केवलपू[illegible]ब्दात्कथमिनेः प्राप्तिरितिचेन्न पूर्वादिनिः सपूर्वाच्चेत्यनयोः स्थाने [illegible]न्तादिनि इष्टादिभ्यश्चेत्यत्रेष्टाद्यन्तेभ्य इत्येव कर्तव्ये पृथक्योगद्वय[illegible]रणमस्यां ज्ञापकम् इत्यत्र तात्पर्यात् । नच पदलाघवाभावः नच [illegible]र्वशब्दस्येष्टादिगणे पाठे इष्टाद्यन्तेभ्य इनिरित्येक सूत्रकरणेन लाघ[illegible]मिति, अनेनेत्यस्यानुवृत्त्येष्टाद्यन्तनिरूपितकर्त्रर्थे एव प्रत्यासत्त्या [illegible]त्ययस्य विधाने कृतपूर्वीत्यस्य सिद्धावपि व्यपदेशिवद्भावेन पूर्वी[illegible]स्यासिद्ध्यापत्तेः पूर्वान्तनिरूपितकर्तृत्वाभावात् अतो योगविभाग[illegible]मर्थ्याद्वहिर्भूतक्रियानिमित्तकर्तृत्वेऽपि पूर्वशब्दात्प्रत्ययार्थे तथाप[illegible]स्यावश्यकत्वादिति [illegible]ाच्यं योगविभागाभावस्यैव लाघवात् । इत्थ[illegible]धर्मिग्राहकमानेन [illegible]त्रोपात्तान्तादिशब्दविषयकत्वमेव तस्याम् इति सि[illegible] । युक्तश्चैतत् प्रत्ययविधिविषयकत्वे हि रोणी उगितश्चेत्यादीनां केव[illegible]ऽप्रवृत्त्यापत्तिः एतदर्थं तस्य चेति पाठे गौरवं स्यात् । नचैवं कुड्[illegible]ाग्रदाम्निति न स्यात् व्यपदेशिवद्भावाप्राप्तेरिति वाच्यम्, इष्टापत्तेः ॥[illegible]२ ॥

मेव । इयं च प्रातिपदिकग्रहण एव, न तु प्रातिपदिका-प्रातिपदिकग्रहणे । तेन, उगितश्च ( ४, १, ६ ) इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् । इयं ग्रहणवता ( प० ३१ ) इति च परिभाषा प्रत्ययविधिविषयैवेत्यसमासे

---

त्तप्रातिपदिकत्वव्याप्यतत्तद्धर्मावच्छिन्नपरमित्ये ्तत् व्युत्पादयति-इयमित्यादिना । उगितश्चेत्यत्रेति-ं पे यदि प्रातिपदिकपदं प्रातिपदिकसंज्ञकशब्दमात्रपरं तदोगि वेतिसूत्रघटकस्योगित्पदस्य प्रातिपदिकसंज्ञकत्वात् तेनापि व्यपदेशिवद्भावो न स्यात् तथा चेयतीत्यत्र ङीब्न स्यात् यदि । तस्य चेतिवार्त्तिकबलात्केवलादपि ङीबित्युच्यते तदा अ ीत्र आवमित्यत्रेगन्ताच्च लघुपूर्वादित्यण्प्रत्ययसिद्धिः पूर्वो्च स्य फलम्, एवं हि पूर्वपरिभाषासाजात्यमस्याः परिभा ा भवति, अत एव प्रत्ययविधिभिन्ने व्यपदेशिवद्भाव ध्यति, तेन सर्वमधीनं सर्वं वेत्ति वा सर्व इत्यत्र सर्वादेरितिल पूर्वपरिभाषायाः प्रत्ययविधिमात्रविषयत्वात् परमसजूरित्य ्दित्वश्च सिध्यति । ननु यदि व्यपदेशिवद्भावोऽप्रातिपदिकेन परिभाषायाः पूर्वपरिभाषासाजात्यात् प्रत्ययविधिमात्रविषयत्वं दाऽत एव नान्तादसङ्ख्यादेरिति सूत्रस्थैतत्परिभाषासञ्चारे चारिताऽर्थ्यदर्शनमयुक्तम्, यदि प्रत्ययविधिपदं प्रत्य दृश्यकविधिपरं तदा पृथग्योगकरणस्य ज्ञापकत्वकथनासङ्गतिरियं ग्रहणवतेति चेत्युत्तरग्रन्थासङ्गतिश्चेति चेन्न, मडादीनां सिः प्रत्ययत्वमेवेत्याशयस्य कल्पनात् । प्रत्ययविधिशब्दस्त दप्रत्ययकर्मकविधिपर एव, मडादीनां प्रत्ययत्वे नान्तादसङ्ख्यादेरित्यादिषु डड्ग्रहणानुवृत्तिर्न कल्प्या, प्रथमान्तस्य षष्ठ्यन्तत्वकल्पना च न कार्य्येति लाघवम् । द्वेस्तीय-इत्यनेनैकदेशश्च भवति पट्कतीत्यत्र तु थुकूस्थाने थडितिपाठ्यम् । ामत्वप्रतिपादनपरग्रन्थाश्च प्राचामनुरोधेनेति व्याख्ये-

निष्कादिभ्यः (५, १, २० ) इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तेन अहन् (८, २, ६८) इत्यादेः परमाहन्शब्दे केवलाहन् शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२ ॥

---

यम् । न च मडादीनां प्रत्ययत्वे षष्ठ इत्यत्र जश्त्वस्य चतुर्थ इत्यत्र रेफस्य स्था... विसर्गस्य च स्वादिष्वसर्वनामस्थान इति पदत्वापत्तिरिति वा...म्, षष्ठाष्टमाभ्यां चतुर्थीचाशिषीतिनिर्देशेन भत्वानुमानात् । ...चैवमपि विंशतितम इत्यत्र प्रत्ययाद्युदात्तत्वेन तकाराकारस्य ...दात्तत्वापत्तिरागमत्वे तु अनुदात्तत्वमिति दोष इति वाच्यम्, ...शत्यादिभ्य इति सूत्रे वेतिवक्तव्येऽन्यतरस्यांग्रहणेन समुच्च...नान्तोदात्तत्वमपि विधीयत इत्यर्थाश्रयणात् । अत्र मानन्तु ...यो मणिरुभये देवमनुष्या इति भाष्योदाहरणवत्तेनोभयशब्दाद्वा...वनाभावकल्पनाद्विंशतितम इत्यन्तोदात्तोच्चारणमेव यद्वा षष्ठ...माभ्यां चतुर्थीत्यादिनिर्देशेन डड्ग्रहणस्यानुवृत्तस्य सप्तम्यन्तत्वं कल्प्यते । एवञ्च शबादीनां विकरणत्ववत् मडादीनामपि तत्त्व... । एवञ्चान्यत्र विकरणेभ्य इत्त्युक्त्या तस्य प्रत्ययाद्युदात्तत्व...रोऽपि दोषो न भविष्यतीति स्वरे यो दोषः सोऽपि वारि... इति केचित् । परे तु मडादीनामागमत्वमेव युक्तम् मडादिषु य...ादिस्तन्निर्देशः कर्तव्यः अक्रियमाणे प्रत्ययाधिकारात् प्रत्ययो वि...येत तत्र स्वरे दोष इति भाष्येण प्रत्ययपक्षस्य दुष्टत्वसूचनात्, नन्वेवं ... व्यपदेशिवद्भावेन पञ्चन्शब्दस्य सङ्ख्यादित...त् निषेधस्य प्रवृत्तिः स्यादिति चेन्न, एवं सति सर्वत्रैव स...ादित्वात् सूत्रस्यैव वैयर्थ्यमिति मडागमविधानसामर्थ्यात् त...ये व्यपदेशिवद्भावानाश्रयणात्, एवञ्च पृथग्योगकरणं ...पकमित्यस्य व्यपदेशिवद्भावस्य काचित्कत्वबोधनद्वारेति शेषः, ...त एव व्यपदेशिवद्भावस्य काचित्कत्वादेव, अन्यथा = । काचि...त्वानङ्गी-

ननु वान्तो यि ( ६, १, ७९ ) इत्यादौ यादौ प्रत्यय इत्यर्थः कथमत्र आह—

यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

---

कारे इति रीत्योपपात्तिः कार्य्येत्याहुः। द्वयोः परिभाषयोः प्रत्ययविधिमात्रविषयत्वे मानान्तरमाह—इयमित्य् दिना । तेन= । उक्तपरिभाषयोः प्रत्ययविधिमात्रविषयत्वेन । असमासे निष्कादिभ्य इति सूत्रे विधौ प्रतिषेधः प्रतिषेधः यमिति भाष्योक्त्या तथा कल्पनादिति प्रागुक्तम् । न च विधौ तिषेध इत्युक्त्वा पूर्वपरिभाषाया अविषयत्वध्वननमस्तु द्वितीयाः प्रत्ययविधिमात्रविषयत्वध्वननन्तु कथमिति वाच्यम् असमासग्रहणेन तदन्तविधौ ज्ञापिते सति केवले तदन्तस्थः निषेधस्तत्सिद्धिरप्युपपादनीया सा नोपपादिता व्यपदेशिवद्भा त केवले तदन्ते तत्सम्भवस्याभिप्रायविषयत्वात्तेन द्वितीयापि प्रत्ययविधिमात्रविषयेत्यस्य ध्वननात् ॥ ३२ ॥

तदन्तविध्यपवादत्वात् मामपि परिभाषामवतारयति नन्वित्यादिना । कथ ते= । तदन्तविधेः सम्भवादिति भावः । न च यान्तप्रत्य प्रसिद्ध्या न तदन्तविधिरिति वाच्यं गोकाम्यमततीति गोक यात् एतस्माच्छब्दादाख्यानार्थके णिचि टिलोपे यान्तप्रत्यय सम्भवात् । न चाचः परस्मिन्निति स्थानिवत्वमज्झलादे सूत्रारम्भसामर्थ्यादसिद्धत्वमपि न । यस्मिन्नित्यादि । अत्र यस्मिन्निति सप्तम्यन्तानुकरणम्, अल् गृह्यते ज्ञायते ये स्मिन् सप्तम्यन्ते यो विधिः स तदादौ बोध्य

---

( समानविशे कत्यादि ) नामार्थयोरभेदान्वये समानविभक्तिकत्वनियमात् सामानाधिकरण्यं समानविभक्तिकानामेव । एवञ्च वक्ष्यमाणवि ष्यविशेषणयोरुभयोः सप्तम्यन्तत्वेति ग्रन्थः न्यायासिद्धार्थानुवा कः । एतेन मृदु पचतीत्यादौ व्यभिचारादयुक्तमेतदिति यदन्ये प्रत्युक्ताः नामधात्वर्थयोस्तथात्वेऽपि नामार्थयोरतथात्वात् ।

तदन्तविधेरपवाद इयम् । वाचनिक्येषा येन वि-

इति अर्थकरणे इकोयणचीत्यादावपि तदादिविधेरापत्तिरिति तदन्ताविध्यपवादत्वमस्या उक्तम् तदन्तविधिः समानाविभक्तिक-विशेष्यविशेषणवाचकपदसन्निधाने भवति यथा तथेयमपि सप्त-म्यन्तविशेष्यविशेषणवाचकसन्निधाने भवतीति कल्प्यम्, तथा च गृह्यते इतरभिन्नत्वेन ज्ञायते येन तद्ग्रहणम् विशेषणमिति यावत् अल्ग्रहण इति कर्मधारयः पूर्वनिपातप्रकरणस्य समुद्राभ्राद्घ इति निर्देशेनानित्यत्वाद्विशेषणस्य ग्रहणपदस्य परनिपातः गृह्य-माण इत्यस्याध्याहारः एवञ्चेतरभेदानुमितिजनकज्ञानविषये विशेषणे सप्तम्यन्तपदेन गृह्यमाणे यो विधिः स तदादौ बोध्य इति परिभाषार्थो भवति तस्य च यत्र विशेष्यवाचकं सन्निहितं भवति तत्रैव सम्भवो नान्यत्रेकोयणचीत्यादौ तादृशविशेष्यसन्नि-धानाभावात् क्वचित्तु विशेष्यवाचकपदसन्निधानेऽपि अल्बोध-कस्य शब्दस्य विशेष्यसमर्पकतापीयं स्वीकार्य्यम् कारनाम्नि-चेति सूत्रे आदिग्रहणात् तेनाचीत्यस्य सन्निधानेऽपि प्रादूहोढो-ढ्येषैष्येष्वित्यादेरूहाद्यवयवेचीत्यर्थेनार्थ्यते ।। वाचनिक्येषे-ति= । यद्येषा नल्यपीतिज्ञापकसाध्या तर्हि अत्र हि घुमा-स्थेति सूत्रे हलीत्यस्य क्ङितीत्यनेन सम्बन्धेन हलन्तक्ङितीत्य-र्थो वाच्यस्तथा सति ल्यपस्तत्वासम्भवेनेत्वमाप्तिरतः सप्तम्यन्ते क्ङितीत्यस्मिन् सन्निहिते यद्धलीति तत्तदादौ स्वी-कार्य्यमित्येषा स्वीकार्य्या अस्ति च तस्य सार्थक्यं उदाहरणं पी-तवानित्यादि तसादिपरश्चेति वदन्ति तन्न मनोरमम्, हलीत्यस्य क्ङिद्विशेषणत्वे तदन्तविधौ पीतमित्याद्यसिद्ध्यापत्तेः ल्यप उप-देशे हलन्तस्य औपदेशिकहलन्ते इत्वप्राप्तिज्ञापनम् चारिता-

(चारितार्थ्याच्चेति) क्ङितिविद्यमानो यो हल् तस्मिन्नित्यर्थे-नादोषाच्च । एतेन रथवदयोश्चेतिसूत्रं त्रैचेति वार्तिकं

धिः (१, १, ७२) इत्यत्र भाष्ये पठिता। अस्याश्च स्वरूपसती सप्तमी निमित्तम्। अत एव नेड्वशि कृति (७, २, ८) इत्यादौ वशादेः कृत इत्यर्थलाभः। इयं चार्द्धधातुकस्येड् (७, २, ३५) इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याच्च। एतेन पीयते इत्यादिरपि सिध्यति। अकारान्ते कृङिति प्रत्ययेपीत्वं प्रवर्त्तत इत्यर्थज्ञापकतया[...] चारितार्थ्याच्च। नन्वस्यां परिभाषायां यस्मिन् विधिरि[...] न वाच्यम् तदादावलिग्रहण इति पाठ्यम् तस्मिन्निति परिभ[...] पूर्वस्येत्यंशविकलोपतिष्ठतामत आह—अस्याश्चेति। स्[व]रूपसतीत्यनेन सप्तम्यर्थाभावेऽपि अस्याः प्रवृत्तिरितिसूचयते[।] तस्मिन्निति परिभाषया तु न निर्वाहस्तस्याः सप्तम्यर्थसद्भाव[...] प्रवृत्तेः। अत एव=। सप्तमीश्रवणमात्रेण प्रवृत्तेरेव[...] अस्याः प्रवृत्तौ विशेषान्तरमाह—इयञ्चेत्यादिना। आदिग्रहणसामर्थ्यादिति= । अन्यथा वली[...] ब्रूयात्। ननूभयोः सप्त-

चास्यां ज्ञापकमन्यथा [...] कादित्यत्राजन्ते उत्तरपदे इत्यर्थे एषामप्यजन्तत्वेन [...] सिद्धौ एतयोर्वैयर्थ्यं स्यादित्यपास्तम् आचष्टण्यन्ता[...] क्विपि निष्पन्नयोः रद्दोः परत आदेशविधानेन चारितार्थ्या[...] नच तन्मात्रप्रयोजनकत्वे रद्दोरित्येव वदेदितिवाच्यम्, [भि]न्नतरम्वद्धातोः व्यावृत्त्यर्थत्वात्। यत्तु प्रदायच्छत्रमित्यत्र तु[क] ईत्ववारणार्थकतया नल्यपीत्यस्य चारितार्थ्यं नच बहिरङ्ग[त]या तुकोऽसिद्धत्वं, नाजानन्तर्ये इति निषेधादिति वदन्ति तन्न आतोलोप इटिचेत्यादावपि अजन्ते आर्द्धधातुके इत्यर्थापत्तौ प्रदा[...]दावकारस्यैव लोपे चारितार्थ्यस्यासम्भवात् केचित्तु सम्भव[...] सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वान्नल्यपि अपोभि[...]दीनां ज्ञापकत्वमिति वदन्ति (वलीत्येव ब्रूयादिति) ननु[...]विभिन्नविभक्तिकत्वेन सामानाधिकरण्याभावात्तदादिविधेरप्रवृत्तेः तस्मिन्निति परिभाषया वलि परत आर्धधातुकस्येडागमविधाने [भ]विष्यतीत्यादावेव स्यान्नतु भवितेत्यादावपि नेड्वशीतिनिषेधस्तु सुशर्म्मा देवदत्त इत्यादौ चरितार्थः। एवञ्चादिग्रहणं

णसामर्थ्याद्विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव प्रवर्त्तते । तेन डः सि धुट् (८, ३, २९) इत्यादौ सादेः पदस्येति नार्थः । तीषसह (७, २, ४८) सेऽसिचि (७, २, ५७) इत्यादौ यथा सादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

म्यन्तत्व एव चेत्[illegible]या प्रवृत्तिस्तदा तीषसहेतिसूत्रेऽनुवृत्तस्य विशेष्यबोधकस्यार्द्धधातु[illegible]स्येत्यस्य सप्तम्यन्तत्वाभावात्तादेरित्यर्थलाभः कथमत आह–[illegible]षसहेति । अत्रानुवृत्तस्य वलादेरित्यस्य तीतिविशेषणम् त[illegible]सौत्री प्रथमार्थे सप्तमी । एवञ्च वलादेरितिसमुदायार्थेनान्वयो[illegible]व्यधिकरणत्वादितिवलादिपदार्थैकदेशवल्पदार्थेऽभेदेन विशेषण[illegible] तकाररूपवलादेरित्यर्थ एतत् परिभाषाप्रवृत्तिं विनापि सिध्यं[illegible]एवं सेसिचीत्यत्रापि बोध्यम् । वस्तुतस्तु तीषसहेत्यत्र सेसिचीत्य[illegible]च सप्तमी यथाश्रुतैव वलादेरिति च तत्रानुवर्त्तते तीति इच्छत्य[illegible]विशेषणं तस्मिन्निति परिभाषायाः प्रवृत्त्या च तकाराव्यवहि[illegible]स्य इच्छत्यादिभ्यः परस्य वलाद्यार्द्धधातुकस्येडित्याद्यर्थाश्र[illegible]न वेष्टसिद्धिः कार्य्या । एवञ्च तीतिसप्तम्याः प्रथमार्थकत्वक[illegible]ना सौत्रत्वादेकदेशान्वयकल्पना च न कार्य्या तस्मिन्नितिपरिभ[illegible]या षष्ठ्यंशविकलाया

सफलमिति चेन्न बहुलक्ष्यसंस्कारानुरोधेन [illegible]तीति सप्तम्याः षष्ठ्यर्थत्वाङ्गीकारेण तस्मिन्नित्यस्याप्रवृत्त्या सामा[illegible]धिकरण्यस्यापि सत्वेन परिभाषाप्रवृत्तेर्निर्विघ्नत्वात् शमिता यज्ञ[illegible]यादिनिर्देशानामसङ्गत्यापत्तेश्च । (सादेः पदस्येति) नचैवं तदा[illegible]भावेऽपि तदन्तविधिर्दुर्वारो षष्ठ्यर्थकसीतिसप्तम्याः सामान[illegible]करण्यादितिवाच्यम् डःसीतिदृष्ट्या रुत्वविसर्गयोः सिद्धत्वेन [illegible]पदस्यासम्भवात् अगत्या वैयधिकरण्यान्वयस्यैव मन्तव्यत्वात् न[illegible] तदादिविधेरप्यप्राप्तिः, तदन्तविधौ तथाङ्गीकारेऽपि तदादिवि[illegible] सामानाधिकरण्यसम्भवात्तदनौचित्यात् ।

केचित्तु प्रत्ययावयवयकाराव्यवहितपूर्वयोरोदौतोरवा[illegible]स्त इ-

उपस्थितिश्चान्यत्र त्वलृप्तैव । न च तीषसहेत्यादेर्वलादिपदार्थविशेषणत्वेन तस्य तीतिविशेषणं न स्यान्नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायादिति वाच्यम्, गुणः कृतात्मसंस्कार इति न्यायस्यापि क्लृप्तत्वात् । नन्वेवमार्द्धधातुकस्येड्वलादेरिति सूत्रे आदिपदन्त्यक्त्वा वलीत्येव पाठ्यमार्द्धधातुकस्य प्रत्ययतया यस्माद्विहितस्तदादेरित्यस्य उपस्थितस्य व[ल्]तिविशेषणमिति वलव्यवहितपूर्वाद्यस्मादार्द्धधातुकविधिस्तद[ादेः] परस्यार्द्धधातुकस्येडित्यर्थेनेष्टसिद्धिरिति चेन्न । नह्युपाधे[रु]पाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायस्यापीह शास्त्रे [क्व]चित् प्रवृत्तिर्भवतीत्यस्य ज्ञापनार्थन्तत्सत्वात् । यत्तु प्रकृतसूत्रे आदिग्रहणाभावे श्रुतत्वाद्वलीति आर्द्धधातुकस्यैव विशेषणं [स्या]न्नाक्षिप्तस्येतिवल्यार्द्धधातुकस्येत्यर्थापत्तौ भविष्यतीत्यादावे[व] स्यान्न तु भवितेत्यादावित्या-

---

त्यर्थेन सर्वेष्टसिद्धौ परिभाषा [व्य]र्थैव । नचाश्वशब्दात् गोयुगच्प्रत्यये अश्वगोयुगमित्यत्र प्रत्ययाव[यव]यकाराव्यवहितपूर्वत्वेन गोघटकौकारस्यावादेशापत्तिः, नच अ[क]ारोच्चारणसामर्थ्यान्नावादेशः । अन्यथागव्यजेव विदध्यात्, अ[स्मि]न समासे अश्वगोयुगशब्दादाचष्टण्यन्ताण्णिचि कर्तरि क्विपि त[न्]निमित्तकयलोपे निष्पन्ने अश्वगोशब्देतस्य चारितार्थ्यादन्यथा [च]स्योठि वृद्धौ अश्वगौ इतिस्यात् लोपात्प्रागवादेशस्तु अकृत[व्यू]हतिपरिभाषया नेतिवाच्यम् औकारसाहचर्येण तत्प्रत्ययानवयवौ[का]रस्य ग्रहणात् । ङमोह्रस्वादचीत्यादौ पदेपरतः यो ङम् तत[ः प]रस्य ङमुडागम इत्यर्थेन नव्यमते परमदण्डिनावित्यादौ ङमुडा[ग]ा न ङमः पदे परत्वाभावात्, प्राचनिमतेऽपि ङमन्तस्य पदत्त्वाभा[वा]न्न दोषः । मिनातिमीनोतीत्यत्र लक्षणया इत्संज्ञकशकारादावि[त्य]र्थः । इत्संज्ञकशेपरे इत्यर्थोवा । शस्येत्संज्ञालोपाभ्यामपहारेऽपि[भू]तपूर्वगत्याश्रयणेन तत्परत्वं बोध्यम् । आतो लोप इटिचेत्यार्धधातुकावयवाचोः क्ङिदिटोः परयोरित्यर्थेन निर्वाहः । ए[व]ंसर्वत्र । अत एव एकइत्यादौ तादौ चेत्यादौ आदिग्रहणं चरितार्थम्, इतिवदन्ति । वस्तुतस्तु सम्भवति सामानाधिकरण्ये [वै]धिकरण्यस्यान्याय्यत्वात्परिभाषाकल्पनमेव न्याय्यम् ॥३३॥

घटपटं घटपटावित्यादिसिद्धये आह—

सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

दिग्रहणस्य चारितार्थ्यात् न ज्ञापकत्वसम्भव इति तन्न, जुष्टार्पितेन च्छन्दसीतिनिर्देशेन तादृशार्थासम्भवात् । न चेकारणैकादेशे कृते चकाररूपत्वपरत्वेन निर्देशोपपत्तिरिति वाच्यम्, अचः परस्मिन्निति स्था[illegible]वद्भावेन तत्वासम्भवात् परोक्षे लिडिति सूत्रे साधनेषु परोक्ष[illegible]यर्थकल्पने यदा रथ्यायान्तण्डुलोदकं दृष्टङ्कथन्तत्र भवितव्यमिति भाष्यप्रयोगे इडनापत्तेश्च । यत्तु विशेषणविशेष्ययोरुभयोः सप्तम्य[illegible]त्व एव चेत्तदादिविधिस्तदा द्विगोर्लुगनपत्ये इतिसूत्रभाष्ये [illegible]गर्गरूप्यमित्यादौ लुक्परिहारायाजादिग्रहणं कर्तव्यमिति व[illegible]कृतोक्तं तस्य खण्डनार्थङ्गोत्रे लुगचीति सूत्रादचीत्यपकृष्याजा[illegible]रितिवाक्यभेदेन व्याख्यातम् तेन क्वचिदनजादेरपि लुक् द्विरथ[illegible]त्यत्र यतो यथेति चोक्तं तदेतद्विरुद्धमिति तदपि न, तस्य भा[illegible]ग्रन्थस्याप्यचपदसम्बद्धं यदजादीतिसमुदितन्तन्न कार्यङ्क्ङिन्त्वा[illegible]इणङ्कार्यमित्यत्र तात्पर्यात् । न चैवमपि हुझल्भ्योहेर्धिरितिसू[illegible]भाष्ये रुदिहि स्वपिहीत्यत्र झलन्तात् परत्वात् धित्वं प्राप्नोतीत्या[illegible]घसिभसोर्हलिचेत्यतो हलीत्यनुवर्त्त्य हलादेःहेरिति व्याख्यानेन [illegible]षः परिहृतः तत्र विशेष्यस्य सप्तम्यन्तस्याभावेन तदादिपरत्वेन व्याख्यानं विरुध्यत इति वाच्यम्, निर्दिश्यमानपरिभाषयैव दो[illegible]भावे सिद्धे हल्ग्रहणानुवृत्तिपरभाष्यस्यैकदेशयुक्तित्वादिति दिक् ॥ ३३ ॥

कृद्ग्रहण इति परिभाषया यथाऽतिदेशेन [illegible]कारकविशिष्टस्य कार्यं भवति तथा द्वन्द्वविषयेऽपि अतिदेशमाह[illegible]र्वोद्वन्द्व इत्यादि । सर्वपदस्य कात्स्न्यर्थकतया द्वन्द्वश्च [illegible]त्यादिप्रक-

( अतिदेशमाहेति ) सम्प्रसङ्गसङ्गत्येतिभावः । सर्वो [illegible] इति= । ननु समुदायेऽवयवगतसङ्ख्याया आरोपे इतरेतरयोगद्व[illegible] अना-

द्वन्द्वश्च प्राणी (२, ४, २) इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः । चार्थे द्वन्द्वः (२, २, २९) इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानात् न्यायसिद्धेयम् । तिष्यपुनर्वस्वोः (१, २, ६३) इति सूत्रस्थं बहुवचनस्येतिग्रहणमस्यां ज्ञापकम् । तद्धीदं तिष्यपुनर्वस्वित्यत्र तद्व्यावृत्त्यर्थम् । न [illegible]वमप्यत्र जातिरप्राणिनाम् (२, ४, ६) इति नित्यै[illegible]वद्भावेन बहुवचना-

---

रणविषयेऽपि वैकल्पिकत्वं प्राप्नोति[illegible]त्यत आह—द्वन्द्वश्चेति । सामर्थ्यात्तस्य प्रकरणस्य न वै[illegible]ल्पिकत्वम् । एवञ्च सर्वपदं परिभाषाघटकश्चार्थे द्वन्द्व इति[illegible]सूत्रोदाहरणस्य बोधकं न तु लक्षणस्येति फलितम् । अस्[illegible] परिभाषाया न्यायसिद्धत्वेऽपि दार्ढ्याय लिङ्गमप्याह—तिष्[illegible]त्यादिना । ज्ञापकमित्यस्यापीति शेषः । बहुवचनग्रहणस्य ज्ञा[illegible]कत्वमुपपादयति—तद्धीत्यादिना । पुनर्वसुशब्दस्य ताराद्वयबो[illegible]कतया वाच्यार्थस्य बहुत्वस्य व्या-

---

रोपे समाहारः इतिवि[illegible]त्यैवोक्तरूपद्वयस्य सिद्धौ व्यर्थेयम्परिभाषेतिचेन्न सर्वनामसंज्ञक[illegible]नाभिमतशब्देषु विवक्षाद्वयसत्त्वेऽपि इतरत्र तत्सत्वे मानाभा[illegible]क्तरूपद्वयानापत्तेः । अत एव लोके वृक्षाः वनमिति व्यवस्थया [illegible]योगः नतु वनानि वृक्ष इति सर्वनामस्थलेतु सर्वो लोकः सर्वे ल[illegible] इति द्विविधप्रयोगदर्शनादुभयविवक्षापि भवति । तथाच क[illegible]दुद्भूतावयवभेदकसमुदायबोधकः यथा वृक्षशब्दः, कश्चिद[illegible]द्भूतावयवभेदकसमुदायबोधकः यथा वनशब्दः, कश्चिदुभयविध[illegible]धकः यथा सर्वादयः तत्र द्वन्द्वस्योभयविधबोधकाभावात्परिभा[illegible]म्भ इतितात्पर्यम् । न च चार्थे द्वन्द्व इत्यनेन समाहारेतरेतरयो[illegible]विशेषेण द्वन्द्वविधानादेव विभाषयैकवद्भावे सिद्धे किमर्थोऽयम[illegible]म्भ इति वाच्यम् द्वन्द्वश्च प्राणितूर्येत्यनेन प्राण्यङ्गादीनामेव सम[illegible]हारो नेतरेषामिति प्राप्तविपरीतनियमव्यावृत्त्या परिभाषाया [illegible]वश्यकत्वात् (व्यावर्त्याऽप्रसिद्धेति) विपरीतनियमेनैक-

भावादिदं सूत्रं व्यर्थमिति वाच्यम्, तद्वैकल्पिकत्वस्यापि अनेन ज्ञापनात् । नचैते प्राणिन इति वाच्यम्, आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । स्पष्टं चेदं तिष्यपुनर्वस्वोः ( १, २, ६३ )

---

वर्त्याप्रसिद्ध्या बहुवचनग्रहणं व्यर्थमिति तदेनां परिभाषां ज्ञापयति । एतत्सत्वे त्वनयैवेदं तिष्यपुनर्वस्वित्यस्य सिद्धिरिति भावः । एवम्= चार्थे द्वन्द्व इत्यस्य वैकल्पिकत्वे । इदमित्युपादानेन तिष्यपुनर्वस्वितिसमाहारद्वन्द्वे नपुंसकं, तथा च जातिरप्राणिनामितिसूत्रस्य विषयतास्तीतिशङ्काभिप्रायः । सूत्रं व्यर्थमिति=। अस्योद्देश्याप्रसिद्धेरिति शेषः । तद्वैकल्पिकत्वेति=। अस्यात्र लक्ष्य इति शेषः । न तु सामान्यतो वैकल्पिकत्वमेव तस्य, चार्थे द्वन्द्व इत्यनेनैव सिद्ध्याऽस्य सूत्रस्य वैयर्थ्यमेव स्यात्, यद्वा यत्र व्यक्तेः प्राधान्यविवक्षा तत्रेदन्न प्रवर्त्तते यत्र तु जातेः प्राधान्यविवक्षा तत्र तु प्रवर्त्तते इत्येवंरीत्या वैकल्पिकत्वमित्यर्थः कार्य्यः । अतएव उपक्रमोक्तं घटपटं घटपटावित्येतदप्युपपद्यते व्यक्तेस्तत्र प्राधान्यस्याश्रयणात् । एवमेव तिष्यपुनर्वसुशब्दयोर्द्वन्द्वे व्यक्तिप्राधान्यविवक्षायां पूर्वोक्तरीत्या बहुवचने प्राप्ते द्विवचनविधानं सङ्गच्छते । प्राणिन इति=। देवत्वादेषां प्राणित्वमित्याशयः । आपोमयइति=। अत्रापस्शब्दादाप्लृधा-

---

वद्भावाप्रवृत्तेः । ( ज्ञापयति ) विपरीतनियमाभावकल्पनयेतिशेषः । ( व्यक्तिप्राधान्यविवक्षायाम्पूर्वोक्तरीत्येति ) फल्गुनीप्रोष्ठपदानामित्यतो नक्षत्रग्रहणानुवृत्तिसम्भवे पुनर्नक्षत्रग्रहणेन व्यक्तिप्राधान्य एवैतत्प्रवृत्तेः । एतेनैतद्वैकल्पिकत्वज्ञापनेनैव बहुवचनस्य चारितार्थ्यात्परिभाषाज्ञापकत्वासम्भव इति वदन्तः प्रत्युक्ताः, जातिप्राधान्ये प्रवर्तमानस्य जातिरप्राणिनामित्यस्यात्र विषयाभावेन व्यक्तिप्राधान्ये पूर्ववद्बहुवचनस्यैव सत्वेन तद्वैयर्थ्यस्य सौष्ठवात् ॥ ३४ ॥

इति सूत्रे भाष्ये। अतएव द्वन्द्वश्च प्राणि (२,४,२) त्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥३४॥

सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥

व्यत्ययो बहुलम् (३,१,८५) इति सूत्रे भाष्ये बहुलमितियोगविभागेन षष्ठीयुक्तश्छन्दसि (१,४,९) इति सूत्रे वेति योगविभागेन चैषा साधिता। तेन प्र-

तुप्रकृतिकाऽसुन्प्रत्ययान्ताज्जलपर्यायात् प्राचुर्य्ये तत्प्रकृतवचने मयडिति सूत्रेणान्नमय इतिवन्मयट् आपोमयमिदम् सर्वमापोमूर्त्तिः शरीरिणामिति यथा। भाष्ये=। बहुवचनग्रहणस्य प्रयोजनकथनपरभाष्ये। नन्वेषां प्राणित्वमस्तु जातिरप्राणिनामित्यस्य च वैकल्पिकत्वं मास्तु द्वन्द्वश्च प्राणीत्यादिसूत्राविषये समाहारः प्राण्यङ्गादीनामेवेतिनियमोऽस्त्विति तिष्यपुनर्वसुशब्दयोरितरेतरयोग एव द्वन्द्व इति बहुवचनस्यैव सत्वाद्बहुवचनग्रहणमनर्थकमत आह—अतएवेति। बहुवचनग्रहणादेव पूर्वोक्तप्रकारादेव बहुवचनग्रहणस्य वैयर्थ्यं स्पष्टमेवेति प्राण्यङ्गादीनां समाहार एवेत्येवं नियमो वाच्यस्तथा चेतराणामुक्तरीत्या प्राणित्वाभावात्तेषां समाहारद्वन्द्वो भविष्यत्येव। एवञ्च नित्यैकवद्भावे बहुवचनाभावाद्बहुवचनग्रहणं व्यर्थमेवेति जातिरप्राणिनामित्यस्योक्तरीत्या वैकल्पिकत्वं स्वीकार्य्यमिति भावः जातिरप्राणिनामित्यस्य नित्यत्वे तस्यादित इति सूत्रभाष्ये क्षीरोदके सम्पृक्त इति प्रयोगे द्विवचनासिद्धिरपि स्यादिति द्रष्टव्यम् ॥ ३४ ॥

विकल्पस्य प्रक्रान्तत्वादाह—सर्वे विधय इति। अस्याचार्य्यैरिति शेषः। विकल्पन्त इति पाठस्तु सुगमः। एतल्लाभोपायमाह—व्यत्यये इति। वेतियोगविभागेनेति=। एवञ्चानेन योगविभागेन सर्वेष्टसिद्धौ छन्दसि विकल्पविधायक

तीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम् । युध्यत इति प्राप्नोति ॥ ३५ ॥

ननु क्षियः ( ६,४,५६ । ८,२, ४६ ) इत्यादावियङ्कथमत आह—

प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः । तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति क्षियो दीर्घात ( ८,२, ४६ ) इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

---

सर्ववचनं व्यर्थमिति ध्वनितम् । तेन= । छन्दसि सर्वविधीनां वैकल्पिकत्वेन ॥ ३५ ॥

एकवद्भावस्य प्राक् प्रक्रमात्तत्प्रसङ्गेनातिदेशान्तरस्यापि, स्मृतौ तस्यापि निरूपणमुचितमिति तन्निरूपयितुमवतारयति—नन्विति । कथमिति=। सूत्रघटकशब्दावयवक्षिशब्दो हि क्षिधात्वनुकरणन्न तु क्षिधातुरेवेति भावः । निर्देशः=। सौत्रनिर्देशः । ननु यद्यतिदेशेन धातुत्वन्तर्हि धातुपर्य्युदासात् प्रातिपदिकत्वाभावेन विभक्तिरेव न स्यादत आह—तत्रैवेति ॥ ३६ ॥

---

( क्षिय इति ) ननु ह्रस्वान्तानुकरणे घिसंज्ञायामियङानुपपत्तिः परत्वाद्गुणेन बाधात्, दीर्घान्तानुकरणे क्षियोदीर्घादित्यत्र दीर्घग्रहणं व्यर्थमिति चेन्न असखीतिपर्युदासेनातिदिष्टधातुत्वानाश्रयस्यैव घित्वस्वीकारेण गुणाप्राप्तेः. अनयाऽशास्त्रीयस्यापि गुणाभावस्यातिदेशनादोषाच्च,। अत एव क्षियो दीर्घादिति दीर्घग्रहणं सङ्गच्छते। केचितु दीर्घान्तस्यैवानुकरणं दीर्घग्रहणं तात्पर्यग्राहकमित्याहुः। यत्तु असखीतिपर्युदासेन साहचर्यपरिभाषया वा असंयोगोपधेकारान्तस्य स्पर्शघटकोपधाकेकारान्तस्य शब्दस्यैव वा संज्ञाविधानान्न निर्देशासङ्गतिरिति तन्न विभाषाश्ववोरितिनिर्देशस्यासङ्गत्यापत्तेः कुक्षेरित्यस्यासिद्ध्यापत्तेश्च । वस्तुतस्तु दीर्घस्यैवानुकरणं, क्षियो दीर्घादित्यत्रत्यदीर्घग्रहणन्तु प्रतिपदोक्तक्षीष्धातोःव्यावृत्त्यर्थमितिबोध्यम्॥३६॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्य्यकालपक्षे कथं पदत्वमुभयत आश्रयणेऽन्तादिवत्त्वाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह—

---

अतिदेशप्रसङ्गादतिदेशान्तरमपि वक्तुमाह—नन्विति । कार्य्यकालपक्ष इति । रामं स्मरतीतिप्रयोगे निघातप्रवृत्तिसमये पदत्वज्ञानमपेक्षितन्तच्च न सम्भवति प्रकृत्यवयवप्रत्ययोः स्थाने जातस्यादेशस्यैकस्य उभयरूपत्वस्य निरूपणमसम्भवात् यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने जातः सोऽन्यतरव्यपदेशं लभते इति न्यायेनायं यदि प्रकृत्यवयवस्तदा सुप्त्वाभावः यदि सुबितिव्यपदेशभाक् तदा पूर्वभागो यस्माद्विहितस्तत्वाभाव इति समुदायस्य पदत्वं कथमिति भावः । अत्र कार्य्यकालपक्ष इत्युपलक्षणम्, यथोद्देशपक्षेऽपि पूर्वकालप्रवृत्तस्य पदत्वस्यैकादेशे कृते रामावित्यादौ समुदायस्यान्यत्वाद-

---

(पूर्वकालप्रवृत्तस्येति) नित्यमपि एकादेशं बाधित्वा फलानभिसन्धाननापरनिमित्तकत्वेनान्तरङ्गत्वादितिभावः (समुदायस्यान्यत्वादलाभादिति) इदं न युक्तम्, आनुमानिकस्थानिवद्भावेन पदत्वस्य सुलभत्वात् । कार्यकालेतु नानुमानिकस्थानिवद्भावः यस्माद्विहितस्तदादित्वस्याशास्त्रीयत्वात् । ननु आकडारीयभपदसंज्ञासु यथोद्देशपक्षस्यैव सिद्धान्तितत्वेनैकतरपक्षेणेष्टसिद्धौ पक्षान्तरेणतदुद्भावनस्यानुचितत्वेन च कार्यकालपक्ष इत्यसङ्गतम्, इणधातौ उभयत आश्रयणेत्यस्यानाश्रयणादुभयत आश्रयण इत्यप्यसङ्गतमितिचेन्न प्राचीनमतेनैतद्ग्रन्थप्रवृत्तेः भसाहचर्येण पदपदस्य स्वादिष्विति विहितपदपरत्वात् यद्वा "कार्यं तदा संज्ञा, स्वदेशत्यागश्च"त्यंशद्वयवतः कार्यकालपक्षस्य स्वदेशत्यागांश एव पूर्वग्रन्थस्थैवकारेण व्यावर्तनात् पक्षद्वयेनापि दोषाभावसम्भवस्याभिप्रेतत्वात् । वस्तुतस्तु रामावित्युपलक्षणम् चकार सुषुपुपतुरित्यस्य, अत्र हि द्विरुक्तस्याभ्याससंज्ञायाम् उरदित्यत्वे सम्प्रसारणे च कृते हलादिः शेष इत्यस्य पूर्वभागे द्विरुक्तपूर्वभागत्वाभावेनाभ्यासत्वाभावादप्रवृत्त्यापत्तिः ।

एकदेशविकृतमनन्यवत् ॥ ३७ ॥

लाभात् । एकदेशेन विकृतमिति भावक्तान्तेन तृतीयान्तस्य समास एकदेशस्य विकारप्रतियोगिनाऽपि करणत्वविवक्षया तृतीयेति तत अर्शआद्यजिति केचित् । वस्तुतस्त्वेकदेशो विकृतो यस्येति बहुव्रीहिरित्युचितम् । पूर्वनिपातप्रकरणस्यानित्यत्वन्तु प्रागुक्तम् सामान्ये नपुंसकम् अत्र नञाऽन्यशब्द-

स्थानिवद्भावेन तु नाभ्यासत्वस्य निर्वाहः ऋकारादेरभ्यासत्वाभावात् । सर्वे सर्वपदादेशा इतिन्यायेनापि नातिदेशः तस्यार्थवद्विषयकत्वेनात्राभ्यासस्यानर्थकत्वात् । न चार्थविकारेणार्धाधिक्येन वा न्यायाप्रवृत्त्या कथमभ्यासत्वमिति वाच्यम् स्वीयविधेयताश्रयावधिकपूर्वत्व स्वीयोद्देश्यविधेयोभयमात्रारब्धसमुदायघटकत्वोभयसम्बन्धेन द्वित्वशास्त्रविशिष्टोऽभ्याससंज्ञको भवतीत्यर्थकपूर्वोऽभ्यास इत्यस्य प्रवृत्तौ " कृकृ " इति समुदायनिष्ठस्य स्वीयोद्देश्यविधेयोभयमात्रारब्धसमुदायत्वस्य " कर्कृ " इत्यत्र न्यायेनातिदेशात् । द्वितीयसम्बन्धादूर्णुनावेत्यत्रोर्णु इत्यस्य नाभ्यासत्वमिति बोध्यम् । यत्तु देवदत्तः पचे, प्रहिणोति, प्रराभ्यां कुलाभ्यामित्यादि फलम् "पच इ" इत्यत्रत्यतिङन्तत्वस्य " पचे " इत्यत्रारोपेणाद्ये निघातः "हिनो" इत्यत्र हिनुशब्दत्वारोपेण द्वितीये हिनुमिनेतिणत्वं, "रि" इत्यत्र रैशब्दत्वारोपेण तृतीये रायोहलीत्यात्वं सिध्यति इति तन्न स्थानिवद्भावेन गतार्थत्वात् । एतेन "पचे" इत्यत्र स्थानिवद्भावेऽपि प्रहिणोतीत्यत्र न तेन निर्वाहः, ओकारे उबुध्याऽपि हिनुशब्दत्वालाभात्, सर्वे सर्वपदादेशा इत्यस्यार्थवद्विषयकत्वात् स्थानिनि सति यत्कार्यं तदादेशेपीत्यर्थकेनाचः परस्मिन्नित्यनेनापि न, स्थानिन्यभवत आदेशेप्यभावात् इत्यपास्तम् । निगाल्यत इत्यस्य सिध्यर्थं तादृशनियमस्याभावादन्यथा लत्वम्बाधित्वा णिलोपोत्तरं लत्वन्नस्यात् (इत्युचितमिति) इदं व्युत्पत्तिद्वयं न युक्तम् मान्ताकारान्तरामशब्दयोर्निरुक्तैकदेशविकृतत्वासम्भवात् एवञ्चैकदेशः विकृतः यत्रेति बहुव्रीहिर्बोध्यः । तथाच स्वावयवविकारविशिष्टं स्ववद्भवतीति परिभाषार्थः । स्वाघटकत्व स्वघटकमात्रोद्देश्यकविकारेत-

अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यानिषेधेऽन्यत्वाभावः सुतराम्। अत एव तादृशादर्थबोधः। अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यात्। एवं च राम इति मान्तस्य यस्माद्विहितस्तत्त्वम् औ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम्। छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते

---

स्य समासेऽन्यभिन्नाप्रसिद्ध्या वाक्यार्थाप्रसिद्धिरत आह—अनन्यवदित्यस्येति। न चैवमपि अन्यत्वस्य केवलान्वयितयाऽन्यसादृश्याऽप्रसिद्ध्या ऽप्रसिद्धितादवस्थ्यमिति वाच्यम्, तत्कार्य्यविधौ यद्यद्धर्मावच्छिन्नस्यापेक्षा तत्तद्धर्मावच्छिन्नभेदवत्परमत्रान्यपदमिति ततो वतिप्रत्यये सति तादृशभेदवत्सादृश्यन्नेत्यर्थात्। नन्वेवमन्यसादृश्यनिषेधेऽपि अन्यत्वनिषेधालाभेन रामावित्यादौ पूर्वोक्तदोषोऽस्त्येवेत्यत आह—तत्रेति। तत्र=। एकदेशविकृते। अन्यत्वाभावः=। अन्यत्वनिषेधः। अतएव=। अन्यत्वनिषेधादेव। तादृशात्=। विकृतात्। अन्यथा=। अन्यत्वानिषेधाभावे। परिभाषायां मानमाह—छिन्नपुच्छइत्यादिना। यत्र भूयोऽवयवदर्शनन्तत्र जातेरभिव्यक्तिरितिलोकन्यायेन तत्र तत्र

---

त्त्व उभयसम्बन्धेन स्वविशिष्टाघटितत्व स्वघटकोद्देश्यकविकारघटितत्व स्वघटकोद्देश्यकविकारेतरयावद्घटितत्वैतत्त्रितयसम्बन्धेन स्वविशिष्टं स्ववद्भवतीति निष्कृष्टोऽर्थः तेन न निर्जरशब्दे जराशब्दत्वापत्तिः नवाऽरेति समुदायस्य जराशब्दत्वापत्तिः। (शक्ततावच्छेदकेति) शक्तं पदम्, शक्ततावच्छेदिका याऽऽनुपूर्वी, तद्विशिष्टमेव शक्यार्थबोधकं विकृतावयवत्वे तु तदवच्छेदिकानुपूर्व्यसत्वात्ततस्तादृशादर्थबोधो न स्यादित्यर्थः।

तत्त्वं लोकन्यायसिद्धम् । अत एव प्राग्दीव्यतः ( ४, १, ८३ ) इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदित्युक्तम् । एतेनायं, न्यायः शास्त्रीयकार्य्य एव शास्त्रीय-

स स धर्मः परिकल्प्यः । लोकन्यायसिद्धस्यापि अत्र शास्त्रे आश्रयणे मानमाह—अतएवेति । लोकन्यायसिद्धस्यास्य वचनस्याङ्गीकारादेव । विकृतनिर्देशः=। इकाराभावरूपो यो विकारस्तद्विशिष्टनिर्देशः, अत्र विकारो न शास्त्रीयः किन्तु इच्छयानुच्चारणमेव । यत्र शास्त्रीयो विकारस्तत्रैवैषा परिभाषा प्रवर्त्तते इति नाग्रहः, किञ्च शास्त्रीयविकारेऽपि, परिभाषाया लोकन्यायसिद्धत्वात् । अत एव रामावित्यादौ वृद्धेः शास्त्रबोध्यत्वेऽपि अकारनिवृत्तेरार्थिकत्वेनाशास्त्रीयत्वेऽपि परिभाषाप्रवृत्तिः । अन्यत्वस्य निषेधे शक्ततावच्छेदिका याऽऽनुपूर्वी तदभेदप्रतीतिरपि अर्थबोधजनकनियामिकास्तीति तस्मादर्थबोधः । एतेन= । अस्य न्यायस्य लोकसिद्धत्वेन । ननु कार्य्यकालपक्षमुपक्रम्यैतत्परिभाषावतरणमयुक्तमाकडाराधिकारस्थसंज्ञाविषये यथोद्देशपक्षस्यैवाश्रयणादिति चेन्न, यत्र तदधि-

आर्थसमाजेति=। अर्थानामयमार्थः, स चासौ समाजः समुदायस्तेन ग्रस्तं गणितम्, अर्थसम्बन्धिसमुदायान्तर्वृत्तमित्यर्थः । किमर्थमिति=। न च लाघवात्तान्तस्यैवावधित्वे तस्यैवेदमनुकरणं न विशिष्टस्येतिवाच्यम् अत इञित्यत्राणिञोः पर्यायेण विधानव्यावृत्त्यर्थमर्थानामेवावधिमत्वस्येष्टत्वेनावध्यवधिमतोस्साजात्यमितिनियमादर्थस्यैवावधित्वस्येष्टत्वात्तान्तस्य निरर्थकत्वेन तत्वासम्भवात् एवञ्चैकदेशविकृतोप्यर्थबोधकः, अन्यथाऽनेन न्यायेन शब्दस्वरूपाभेदप्रतिपादनेप्युक्तरीत्या ऽर्थाबोधकत्वेनार्थस्यावधित्वं न स्यादिति भावः । ज्ञापयतीति=। बोधयतीत्यर्थः, स्वांशे चारितार्थ्यास-

विकारे श्वेत्यपास्तम् । विकृतावयवनिबन्धनकार्य्ये तु नायं, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य दुरुपपादत्वात् । एवमुक्तपरिमाणग्रहणेऽपि कारस्थसंज्ञाद्वयप्रसक्तिस्तत्रैव यथोद्देशत्वस्याश्रयणात् तथाचोक्तं प्राक् "आकडाराधिकारस्थभपदसंज्ञाविषयेत्विति" यत्र तु न द्वयोः प्रसक्तिस्तत्र कार्य्यकालत्वमपि । अत एवान्तादिवच्चेति सूत्रे परादिवद्भावस्य वृक्षे तिष्ठतीत्यादौ कार्य्यकालपक्षे निघातसिद्धिः फलमित्युक्तम् । ननु व्यवस्थितयोः कार्य्यकालपक्षयथोद्देशपक्षयोर्मध्ये यथा प्रगृह्यसंज्ञाविषये यथोद्देशपक्ष एवाङ्गीक्रियते अन्यथा अणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नस्येदूदेदितिसूत्रस्य प्लुतदृष्ट्याऽसिद्धत्वात् प्लुते कृते आगच्छतमग्नी इत्यादौ त्रिमात्रत्वादीकारस्य प्रगृह्याभावेऽनुनासिकापत्तिर्यथोद्देशपक्षाश्रयणे तु प्लुतस्यैव प्रगृह्यसंज्ञाविधायकशास्त्रदृष्ट्यासिद्धत्वेनादौ प्रगृह्यत्वं भवति । न च तस्य स्थाने प्लुतादेशे तन्निवृत्तिरिति वाच्यम्, त्रिमात्रेऽपि प्लुतेऽसिद्धत्वेन द्विमात्रबुद्ध्या पुनः प्रगृह्यत्वाङ्गीकारात्। तथा रामावित्यादौ यथोद्देशत्वाङ्गीकारेण पदत्वस्य पूर्वप्रवृत्तस्य सर्वे सर्वपदादेशा इति न्यायेन सिद्धावेकदेशविकृतमनन्यवदिति परिभाषा नाश्रयणीयेति चेन्न, द्व्युध्नी अत्युध्नीत्यादावनाङि कृते बहुव्रीहेरूधस इति ङीप्प्रवृत्त्यर्थं परिभाषाङ्गीकारस्यावश्यकत्वात् विकृतावयवेति=। यथा मघवतः मघवतेत्यत्र मघवाबहुलमिति त्रादेशे कृते सम्प्रसारणमनेन न्यायेन, तत्रहि श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति हि भाष्ये उक्तम् । उक्तार्थे मानमाह—छिन्नपुच्छइति । विशेषान्तरमप्याह—एवमक्तेति । परिच्छिन्नपरिमाणेत्यर्थः, परिमाणमत्रानुपूर्वी यथोक्त-

म्भवात् । नन्वेवं कतरदित्यत्र विकृतावयवह्रस्वत्वप्रयुक्तमपि कार्यं स्यादत आह—( विकृतावयवेति ) अक्तपरिमाणेति=। संख्यात्वपरिमाणत्वव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिब-

नायम्, उक्तयुक्तेः। एतत्, येन विधिः (१,१,७२) इत्यत्र भाष्यकैयटयोर्ध्वनितम्। यत्र त्वर्द्धं तदधिकं वा

---

परिमाणार्थवाचकानान्द्रोणादिशब्दानामधिके न्यूने वा न प्रवृत्तिरिति लोके दृश्यते तद्वत्। अत एवाऽराजकीयमित्यत्र राज्ञः कचेतिछप्रत्यये नकारस्य ककारादेशे च कृतेऽल्लोपोन इति न। एवञ्च विशिष्टानुपूर्वीकाणां शब्दानां साक्षात् संज्ञाद्वारा वा यत्राश्रयणन्तत्रैव न प्रवर्त्तत इति, संज्ञाद्वारापरम्पराश्रयणादुभीयादित्यादावेतेर्लिङीति न प्रवर्त्तते, तदेतद् वक्ष्यति "क्वचित्तु लक्ष्यानुरोधादिति"। एतत्= पूर्वोक्तमर्थजातम्। ध्वनितमिति=। तत्र ह्युक्तपरिमाणानामर्थानां वाचका ये शब्दास्ते न न्यूने न वाधिके इत्यस्य न्यायस्य सङ्ख्याशब्दपरिमाणशब्दयोः प्रवृत्तिरुक्ता, तत्रार्थशब्दस्य वाच्यपरस्य संज्ञापरस्य च कथनं ध्वनितमित्यर्थः। एवञ्च

---

न्धकतावच्छेदकविषयताश्रयविशिष्टत्वम् वै० स्वघटितत्व स्वसमनियतत्वान्यतरसम्बन्धेन। ह्यचकत्वस्य एकत्वप्रतिबन्धकीभूतद्वित्वघटितत्वात् जरात्वादेस्त्रित्वप्रतिबन्धकीभूतचतुष्ट्वसमनियतत्वात्परिच्छिन्नपरिमाणत्वम्। गुडोदकमित्यत्र दकशब्दे उदकशब्दत्वातिदेशपरं भाष्यन्तु पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेतिपरिभाषया पूर्वमेव स्वरप्रवृत्तेरेकदेशयुक्तम्। न चैव दीव्यतिशब्दत्वस्याप्यनेनातिदेशाभावः, दीव्यतिशब्दनिष्ठबोधजनकत्वस्यैव दीव्यच्छब्देऽतिदेशेनष्टासिद्धेः। यत्तु चतुष्ट्वं न जरात्वसमनियतं चतुष्ट्वस्य प्रतिधर्मिभिन्नत्वादिति तन्न जरात्वजातेः समनियतत्वाभावेऽपि तादृशव्यक्तिनिष्ठधर्मस्यतथात्वात्। अत एव लक्षणे न जातिपदोपादानम्। एतेन जातिघटितलक्षणं कृत्वा शेखरोपपादनाय व्यापकाभावप्रतियोगित्वपर्यन्तं क्लिश्यन्तस्तेऽपास्ताः। केचित्तु उदके केवले इतिसूत्रस्थभाष्यविरोधान्न समनियतधर्मस्यानेनानतिदेशः, अभीयादित्यत्र तु न्यायस्यानित्यत्वाद् ह्रस्वाप्रवृत्तिः। अत एवाभीयात्पत-

विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वा-प्रतीतौ कार्य्यसिद्ध्यर्थं विकृतानलूरूपावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम्। क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रय-णम्। तेनाभीयादित्यादिसिद्धिः। स्पष्टं च क्वचिन्न्या-

स्वंरूपमिति सूत्रेऽपि। प्रकृते एकदेशविकृतन्यायेनैव निर्वाहेऽवयवा-देशस्थले स्थानिवत्सूत्रस्य न प्रयोजनं किन्तु यत्र समुदायादे-शस्तत्रैवेति कश्चिदाह तदुक्तिं खण्डयति—यत्र त्वर्द्धमिति। यथा यत्प्रस्तौतीत्यत्र तिङ्ङिचोदात्तवतीति प्रशब्दस्य निघातः प्र-शब्दस्य गतित्वे सति स्यात् तच्च प्रकृतेर्धातुत्वसाध्यन्तच्च नैकदे-शविकृतन्यायेनेति तदर्थमपि सूत्रारम्भ आवश्यकः। एवञ्च तत्र सर्वे सर्वपदादेशा इति न्यायेन स्तिवत्यस्य स्तौशब्दादेशकल्पनया स्थानिवद्भावेन धातुत्वबुद्ध्या प्रशब्दस्य कार्य्यकालपक्षे गतित्वं भवति। तदधिकमिति। यथा प्रतीपमित्यत्र पूर्ववत् प्रशब्दस्य गतित्वे सति गतिरनन्तर इति प्रकृतिस्वरासिद्धिर्भवति। यदि सर्व-त्रैकदेशविकृतन्याय आश्रीयते तदा बहुधीवानमाचष्टे स्त्रीत्यर्थे णिचि टिलोपे तदन्तात्क्विपि णिलोपे वा तस्यापि तेन न्यायेना-न्नन्तबहुव्रीहिग्रहणेन ग्रहणं स्यात् तथाच तस्मात् डाप्स्यात्। कार्य्यसिद्ध्यर्थमिति=। राजेत्यादौ सुलोपेऽपि स्थानिवत्त्वेन पदत्वसिद्धिः समुदायादेशस्थले यथा भवति, तथा धियौ कतरद् इत्यादौ यस्माद् विहितस्तत्त्वप्रतीतिरपि स्थानिवत्सूत्रसाध्यैव। अभीयादित्यादिसिद्धिरिति=अत्रोपसर्गत्वस्याक्तपरिमाणनि-ष्ठतयाऽयन्न्याय एतेर्लिङीतिविधीयमाने ह्रस्वे यद्यपि पूर्वोक्तरीत्या

अलिरित्यत्र न जश्त्वमिति वदन्ति। अभीयादिति=। यद्यप्यचः परस्मिन्निति स्थानिवत्त्वेनैव भान्तस्य पदत्वाभावस्तथापि पटि-तीत्यादीनामुपलक्षणं बोध्यम्। केचित्तु एतन्न्यायस्वीकारे यत्र यत्राक्तपरिमाणादौ दोषस्तत्र तत्र न्यायानाश्रयणेनैव निर्वाहो ला-घवादिति तन्न, अण्णन्ताच्छ्रायसशब्दाद्द्विवचने श्रायसावित्यत्र वृद्धौ-

याप्रवृत्तिः प्रथमयोः पूर्वसवर्णः ( ६, १, १०२ ) इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥ ३७ ॥

इति प्रथमम्प्रकरणम् ।

न भवति, तथापि पदत्वस्याक्तपरिमाणनिष्ठत्वाभावेन भान्ते जश्त्वाभावसिद्ध्यर्थमिह लक्ष्यानुरोधाश्रयणं कर्तव्यमिति बोध्यम् । उक्तार्थदार्ढ्याय दृष्टान्तमाह—स्पष्टश्चेति । कैयटेनेति= । तत्र वृक्षानित्यत्र प्रथमयोरितिसूत्रं बाधित्वा पररूपं प्राप्नोति इति शङ्कायां प्रथमयोरिति योगविभागं प्रदर्श्य योगविभागेन पररूपस्य वाधे प्रदर्शिते यथा योगविभागेन प्रथमयोरिति सूत्रमतोगुण इति पररूपं बाधते तथामिपूर्व इत्येतमपि बाधेतेतिशङ्कायां भाष्ये मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते इत्ययं योगविभागः पररूपं बाधिष्यते अमि पूर्वत्वन्न बाधिष्यते इति समाहितन्ततो भाष्यकृतैवोक्तम् यद्येतदस्ति मध्येऽपवादाः, पुरस्तादपवादा इति नार्थ एकेनापि योगविभागेन पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते इत्येवं पररूपमकः सवर्णेदीर्घत्वं बाधिष्यते प्रथमयोः पूर्वसवर्णदीर्घत्वन्न बाधिष्यते इति तत्र मध्येऽपवादा इतीतिप्रतीकमुपादाय कैयटेनो-

सान्तस्योगित्वेनानेन न्यायेनाङ्गतया च प्राप्तस्य नुमः पूर्वसम्बन्धित्वेनाचः परस्मिन्नितिस्थानिवत्वेन वारणपरभाष्यासङ्गतेः अतः पदत्वेकर्तव्ये एवैतन्न्यायानाश्रयणमिति बोध्यम् । अन्यत्रेति=। वस्तुतो व्यर्थेयं परिभाषा रामावित्यादौ यथोद्देशपक्षेण निर्वाहात्, आरेत्यादौ स्वीयविधेयताश्रयावधिकपूर्वत्व स्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसम्बन्धेन द्वित्वशास्त्रविशिष्टोऽभ्याससंज्ञको भवतीत्यर्थकपूर्वोभ्यास इत्यनेनाभ्यासत्वेनादोषात् । प्राग्दीव्यत इत्यत्र तुसौत्र इकारलोपः । अत एव स्थानिवत्सूत्रे भाष्ये आदेशग्रहणेनानुमानिकस्थान्यादेशभावेन पचत्त्वित्यादीनां पदत्वमङ्गीकृत्य एतदर्थमेकदेशविकृतस्योपसंख्यानमिति यन्नोदितं तन्न वक्तव्यं भवतीत्युक्तं सङ्गच्छत इतिदिक् ॥ ३७ ॥

इति प्रथमम्प्रकरणम् ।

अथद्वितीयम्प्रकरणम् ।

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ३८

पूर्वात्परं बलवत् । विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ॥ ३८ ॥

---

क्तम् न्यायश्चायन्न तु वचनं यद्वक्ष्यति यद्येतदस्तीति न हि वचनस्यासत्ता सम्भावना न्यायस्तु क्वचित् क्वचिदाश्रीयत इति युज्यते वक्तुमिति ॥ ३७ ॥

इति प्रथमम्प्रकरणम् ।

---

अथबाधबीजप्रकरणम् ।

एकदेशविकृतमनन्यवदित्यत्र प्रतिषेधार्थकस्य नञः सत्वान्निषेधेन भावांशस्य बाधो दृष्ट इति तत्प्रसङ्गेनान्यप्रयुक्तबाधानामप्युपस्थितिरिति तन्निरूपयति—पूर्वपरेत्यादिना । संग्राहकवाक्यमेतत् । पूर्वापेक्षया परस्य बलवत्वमात्रेण लक्ष्याणां सिद्धिर्न भवतीति फलितार्थमाह—पूर्वस्येति ॥ ३८ ॥

---

अथ बाधबीजप्रकरणम् ।

क्रमप्राप्तं बाधबीजं वक्तुमाह- (एकदेशेति) उत्तरोत्तरमिति-। आनुपूर्व्ये द्वे वाच्ये इत्युत्तरशब्दस्य द्वित्वं समासवच्च बहुलमिति बहुलग्रहणेनात्र समासवद्भावः। एवञ्च पूर्वपरेत्यानुपूर्व्यां यदुत्तरं तद्बलीय इत्यर्थः। अथवा समाहारद्वन्द्वः एक उत्तरशब्दः परवाचकः, एकस्तूत्तरत्वेन गृहीतोत्तरपरः । ननु परशास्त्रं पूर्वशास्त्राद्बलवत् परशास्त्रत्वादित्यनुमाने हेतोः पक्षमात्रवृत्तित्वेनासाधारणत्वाद्व्याप्तिग्रहप्रतिबन्धादप्रयोजकत्वमत आह- विप्रतिषेधशास्त्रमिति-। एवाञ्चनुकूलतर्कसत्वान्नाप्रयोजकत्वं हेताविति भावः ॥ ३८ ॥

नन्वेवं भिन्धि (भिन्तात्) इत्यत्र परत्वात् तातङा बाधितो ऽकच्‍ (धिः) न स्यादत आह—

पुनःप्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

नन्वेवमिति= । पूर्वस्य परशास्त्रेण विप्रतिषेधशास्त्रबलाद्बाधकल्पने । अकज्नस्यात्= । तिङश्चेतिविहितोऽकज्नस्यादित्यर्थः । क्वचित्परत्वात्तातङा बाधितो धिर्न स्यादितिपाठोऽस्ति सत्वयुक्तः धिर्नस्यादित्यस्य भिन्धीत्यत्र धीत्यस्य श्रवणन्न स्यादित्यत्र तात्पर्य्यमिति वाच्यन्तच्च न सम्भवति तातङो वैकल्पिकतया एतदभावे तच्छ्रवणस्य सिद्धेरिति तात्पर्य्यार्थविरोधात्, एवमाशङ्क्य पुनः— प्रसङ्गविज्ञानन्यायेन समाधानमपि न युक्तम् अचश्चेति सूत्रस्थभाष्यविरोधात्, तत्र हि भाष्ये प्रतक्ष्य प्ररक्ष्येत्यत्र संयोगनिवृत्त्यर्थमूकाल इति सूत्रेऽज्ग्रहणमन्यथा ह्रस्वस्य पितीतितुक् स्यादित्युक्त्वा अच्समुदायनिवृत्त्यर्थश्चाज्ग्रहणमन्यथा छेचेतितुको दीर्घात्पदान्ताद्वेतिवैकल्पिकतुका तितउच्छत्रमित्यत्राच्समुदायस्य दीर्घसंज्ञायां बाधः स्यादिति ऊकालोऽजितिसूत्रेऽज्ग्रहणस्य प्रयोजनमचश्चेतिसूत्रे उक्तम् । तत्र कैयटः, दीर्घलक्षणे तुकि परत्वात् प्रवृत्ते सकृद्गतिन्यायाद्ध्रस्वलक्षणः पुनः प्रवर्त्तते ।

(अकच्च स्यादिति) इदं न युक्तमकचो कुत्सानिमित्तकत्वेन वहिरङ्गत्वात् (श्रवणन्न स्यादिति) परत्वात्तातङा बाधात् तातङो हेः स्थानिवत्वप्रतिषेधो वक्तव्य इति वार्तिकेन स्थानिवत्त्वनिषेधाच्च । (सिद्धेरिति) नच तातङोऽभावपक्षे धिभावाभावोऽपि विधेय इति वाच्यम् अप्राप्तविभाषास्थलेऽभावस्य सिद्धतया भावमात्रस्य विधानात् । अत एव मुमुक्षते वत्स इत्यत्राभ्यासलोपो न ॥ केचित्तु भिन्धीति भिन्तादित्यस्योपलक्षणम् तत्र परत्वात्तातङा बाधितो धिर्न स्यात्, एवञ्च स्थानिवत्त्वप्रतिषेधारम्भो व्यर्थः स्यादिति भावः । भाष्यानुगामिनस्तु तिसृणामित्यत्र परत्वात्तिस्रादेशेन बाधितो नुट् न स्यादित्यवतरणमाहुः ॥ ३९ ॥

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह—

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ ४० ॥

तत्र क्वचिच्चरितार्थयोरेकस्मिन् युगपदुभयोःकार्य्ययोरसम्भवेन बाधकाभावात्पर्य्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः। यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः

---

नचैवं विधेयविषये पुनःप्रसङ्गविज्ञानमस्ति नित्यविकल्पयोर्विरोधात् पूर्वेण परस्य बाधप्रसङ्गात् यत्र हि पूर्वो विधिः परन्न बाधते तत्र पुनःप्रसङ्गविज्ञानमित्याह यथा भिन्धकीत्यत्र। एवञ्च भिन्धीत्यत्र तातङि कृतेऽपि यदि पुनःप्रसङ्गन्यायेन समुदायस्य धिः स्यात् तदा तातङ्प्रवृत्तिबाधः स्पष्ट एव ॥ ३९ ॥

नन्वेवम्=। बाधके प्रवृत्तेऽपि बाध्यस्य प्रवृत्तिस्वीकारे। त्रयादेशःस्यादिति=। स्थानिवद्भावेन त्रिशब्दत्वादिति शेषः। सकृद्गताविति=। गतौ पूर्वपरयोर्युगपत् प्राप्तौ सत्यां यो विप्रतिषेधः परेण बाधस्तस्मिन् सति यत्सकृद्बाधितन्तद्बाधितमेव। एतौ द्वावपि न्यायौ लक्ष्यानुरोधाद् व्यवस्थितौ। एतयोर्यथा सिद्धिर्भवति तं प्रकारमाह—तत्रेत्यादिना। क्वचित्=। परस्प-

---

( शास्त्रद्वयप्रसङ्ग इति ) अयम्भावः— यद्यपि विधेये स्वोद्देश्यतावच्छेदकावच्छेदेन व्यापकत्वमवश्यं स्वीकार्यम्, अन्यथा विधेयशून्यस्यापि कदाचित्प्रयोगः साधुः स्यात्, तच्च नेष्टं प्रत्ययः परो भवत्येवेति नियमात्, एवञ्च पर्यायेणेत्यसङ्गतम् तथापि विधेयद्वयविधानारम्भसामर्थ्यादन्यतरत्वेन व्यापकत्वस्वीकारान्न दोषः। यत्तु उद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वय इति तन्न कदाचिद्विधेयशून्यस्यापि साधुत्वापत्तेः। एवञ्चात्रापि शास्त्रद्वयप्रामाण्यादन्यतरत्वेन प्रवृत्तिप्रसङ्गः।

पर्यायेण कार्य्यं करोति यदा तमुभौ युगपत्प्रेषयतो ननादिक्षु च कार्य्यं तदोभयोर्न करोति यौगपद्यासम्भवात्तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसम्भवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थं, तत्र कृते यदि पूर्वप्राप्तिस्तदपि भवत्येवेति पुनःप्रसङ्गविज्ञानसिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम् । यत्तु कैयटादयः व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्त-

राविषये चारितार्थयोरित्यस्य कार्य्ययोरित्यत्रान्वयः एकस्मिन् लक्ष्ये असम्भवेनेत्यत्रान्वयः। लक्ष्यार्थयोः= लक्ष्योपकारकयोः। भाष्ये स्पष्टमिति= । एवञ्च शास्त्रीयदृष्टान्तेन सकृद्गतिन्यायेऽस्मिन् लौकिकदृष्टान्तेन पुनःप्रसङ्गविज्ञानन्यायस्य सिद्धिः। कैयटोक्तरीत्या न्यायद्वयसिद्धिं वदतां मतन्त्वयुक्तमिति सूचयितुमाह—यत्त्वति । व्यक्तौ पदार्थे= । व्यक्तिः पदानां वाच्येतिमते । अयं पक्षः सरूपाणामिति सूत्रभाष्ये द्रव्याभिधाने व्याडिरित्यनेन वर्णितः, द्रव्यवाच्यत्वे सरूपसूत्रारम्भ एव साधकः, तथाचोक्तं भाष्यकृता—प्रत्यर्थशब्दनिवेशान्नैकेनानेकार्थस्याभिधानमिति युक्तश्चायं पक्षः शक्तिग्राहकशिरोमणेर्व्यवहारस्य तत्रैव सम्भवात् अनुगता जातिः शक्यतावच्छेदिकेति न शक्यानन्त्यम् । नचानुगतजातेः शक्यत्वाभावे शक्यतावच्छेदकत्वानुपपत्तिरिति वाच्यम्, अकारणत्वेऽपि कारणतावच्छेदकत्ववत्पदशक्यत्वेऽपि शक्यतावच्छेदकत्वसम्भवात् । तत्वञ्च शक्तिग्रहे शक्यनिष्ठा या विशेष्यता तदवच्छेदकतया भासमानत्वम् । अवच्छेदकत्वञ्चान्यूनानतिरिक्तवृत्तित्वमतः पृथिवीत्वादेर्न घटादिपदशक्यतावच्छेदकत्वापत्तिः । आकाशशब्दादौ तु संज्ञाशब्दवदाकाशशब्दावच्छिन्ने शक्तिरिति नाकाशः शब्दाश्रय इति व्यवहारानुपपत्तिः । प्रातिलक्ष्यमिति= । लक्ष्यभेदेन संस्कारकस्य लक्षणस्य भिन्न-

